स्त्रीपुरुषसम्प्रयोगः वात्स्यायनादिशास्त्रप्रसिद्धचतुष्षष्टिकलात्मकः ताभ्यां प्रमोदः गीतरतिप्रमोदः । सुरभिद्रव्याणां कर्पूरकस्तूरिकादीनाम्, अन्नपानयोः रसनेन्द्रियास्वाद्ययोः, अम्बरस्य वस्त्रस्य च, स्त्रियाः कलत्रस्य च, रत्नानां स्वजातिश्रेष्ठानां, द्युतेः कान्तेः, मन्मथोपकरणानां शयनोपधानताम्बूलादीनां च, ज्ञानस्य काव्यनाटकादिज्ञानस्य, इष्टस्य मित्रस्य अभिलषितस्य बन्धोश्च, एतेषामागमः, सम्प्राप्तिः । पौनःपुन्यं द्योतयितुं बहुवचनप्रयोगः । क्रयविक्रये कौशल्यं वाणिज्ये निपुणता । कृषिनिधिप्राप्तिः, कृषिकर्मणा निधेश्च धनस्यागमः, अर्थात् क्रयविक्रयाभ्यां कृषिकर्मणा निधिलाभेन च धनागमो भवेद् इत्युक्तं भवति । वन्यव्याधनिषादधर्मरहितैर्वैरम् । वन्या वनचराः, व्याधा लुब्धकाः, निषादा हीनजातयः, धर्मरहिताः पाषण्डादयः, एतैर्वैरं भवति । स्नेहनिमित्ताः शोकाश्च जायन्ते । मिथ्यायामुभयमपि भवति ॥ १७॥

अथ मन्ददशाफलं[1] शार्दूलविक्रीडितेनाह—

सौरीं प्राप्य खरोष्ट्रपक्षिमहिषीवृद्धाङ्गनावाप्तयः
श्रेणीग्रामपुराधिकारजनिता पूजा कुधान्यागमः ।
श्लेष्मेर्ष्यानिलकोपमोहमलिनव्यापत्तितन्द्रीश्रमा
भृत्यापत्यकलत्रभर्त्सनमपि प्राप्नोति च व्यङ्गताम् ॥१८॥

इति । सौरीं[2] शनैश्चरसम्बन्धिनीं दशां प्राप्य खरोष्ट्रपक्षिमहिषीवृद्धाङ्गनावाप्तयो भवन्ति । खराणामुष्ट्राणां पक्षिणां महिषीणां वृद्धस्त्रीणां च प्राप्तयो भवन्ति । श्रेणीग्रामपुराधिकारजनिता पूजा । बहूनां समानजातीयानां सम्पातः श्रेणी । तस्यामधिकारो नियुज्यते ग्रामे पुरे वा । श्रेण्यधिकारेण ग्रामाधिकारेण पुराधिकारेण च जनिता पूजा । कुधान्यागमः वरकश्यामादीनामागमः, एतन्निमित्तभूतैर्धन-

1. 'नां कामक्रीडोपकरणानां च ताम' . २. 'श्च प्राप्तिः घ' ख ३. 'लमाद-' घ. ग; 'लाम्पाद-' घ. ङ. ४ 'रीं द ख. घ. ङ. ५. 'मापमुद्गतिलादीना' क.

मित्यर्थः। अनिष्टफलान्याह— श्लेष्मेर्ष्यानिलकोपमोहमलिनव्यापत्तितन्द्रीश्रमा भवन्ति। श्लेष्मणा कफेन, ईर्ष्यया अक्षमया, अनिलेन वातेन, कोपेन अस्थानकोधेन, मोहेन अज्ञानेन, मलिनेन कुत्सितकर्मणा, चौर्यादिना व्यापत्तिः, उक्तैः कारणभूतैर्जनिता व्यापत्तिश्च। तन्द्री निद्रालस्ययोरन्तरे वर्तते। तस्या लक्षणं—

"हृदये व्याकुलीभावो वाक्चेष्टेन्द्रियगौरवम्।
मनोबुद्ध्यप्रमादश्च तन्द्राया लक्षणं विदुः॥"

इति। श्रमः देहमादः। एते च सम्भवन्ति। भृत्याप्त्यकलत्रभर्त्सनमपि भृत्येभ्यः अपत्येभ्यः कलत्रेभ्यश्च भर्त्सनं तर्जनं प्राप्नोति। व्यङ्गतां च व्याध्यादिनाङ्गच्छेदं च प्राप्नोति॥१८॥

अथ दशाफलानां विषयविभागार्थं लग्नदशा(फला)र्थं च उपसंहरन्नाह—

दशासु शस्तासु शुभानि कुर्व-
न्त्यनिष्टसंज्ञास्वशुभानि चैवं।
मिश्रासु मिश्राणि दशाफलानि
होराफलं लग्नपतेः समानम्॥१९॥

इति। शस्तासु दशासु शुभानि कुर्वन्ति इत्यन्वयः। सम्पूर्णापूर्णारोहिणीसंज्ञास्वेव शुभानि कुर्वन्ति। अनिष्टसंज्ञास्वशुभानि कुर्वन्ति। अनिष्टसंज्ञासु रिक्तानिष्टफलावरोहिण्यधमासु। मिश्रासु मिश्राणि दशा-

१ 'न्द्रा च श्रमश्च पुनः भवन्ति' घ ङ २ 'प्नुवन् प्राप्नोति न्ते' घ ३, ४ 'ते' च घ ङ ५ 'णं मं ख, 'णं च मं घ ङ ६ 'कुत्सन ग ■ ङ ७ 'ति घ। म ८ 'ताम् अङ्गवैकल्यं च प्रा', ९ 'एवं पृथक् पृथग्गुणानामिष्टफलानामनिष्टफलानां च निर्देशं प्रति (उभय,त्रि)भाव दर्शयति— ङ' च घ ङ १० 'वम्।' घ ११ 'सु सर्वे ग्रहाः शुभानि फलान्येव कु क १२. 'न्ति। सम्पूर्णारोहिमसंज्ञास्वेव घ १३ 'च। श्लोके यानि शुभान्यभिहितानि तान्येव कुर्वन्ति, नेतराणि। अनिष्टसंज्ञासु अशुभान्येव, नेतराणि। मिश्रासु दशाफलानि मिश्राणि कुर्वन्ति शुभान्यशुभानि च। पूर्ववत् प्रतिसूत्रं व्याख्यानम्। होरा क.

[1]दशाकालोपभोग्यानां कर्मभोगविनाशविषयाणां वस्तुविशेषाणां पाञ्चभौतिकानां द्रव्यत्वानिर्णयाय ग्रहाणां स्वस्वभूतगुणव्यञ्जकत्वं दर्शयति—

छायां महाभूतकृतां च सर्वे-
ऽभिव्यञ्जयन्ति स्वदशामवाप्य।
रूक्षाग्निवाय्वम्बरजान् गुणांश्च
नासास्यदृक्त्वक्छ्रवणानुमेयान् ॥२१॥

इति। सर्वे ग्रहाः स्वदशामवाप्य स्वां महाभूतकृतां छायां च अभिव्यञ्जयन्ति इत्यन्वयः। स्वामिति[3]। "शिखिभूखपयोमरुद्गणानां वशिनो भूमिसुतादयः" इति युक्तं कुज आग्नेयीं बुधः पार्थिवीं गुरुर्नाभसीं भृगुराप्यां शनिर्वायवीं च छायां स्वदशाकाले पुरुषस्य अभिव्यञ्जयन्ति अभिमुखेन[4] यथावद् व्यञ्जयन्ति। अत्र सर्वशब्दादादित्यचन्द्रावपि गृह्येते। ननु तयोर्महाभूताधिपतित्वं नोक्तम्। नैष दोषः। आदित्यचन्द्रौ वह्न्यम्ब्वात्मकौ प्रसिद्धावेव। अतस्तावपि वह्न्यम्भसोरधिपती, न केवलं भौममिताविव। ततश्चाग्नेयीं छायां रविकुजावभिव्यञ्जयतः। छायामिति। छाया कान्तिविशेषः। "वर्णमाक्रामति छाया" इत्युक्तलक्षणा छायात्र गृह्यते। तथाचोक्तं वाहटेन—

"खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः।
नाभसी निर्मला नीला सस्नेहा संप्रभेव च॥
वातजा रूक्षिरा श्यामा भस्मरूक्षा हतप्रभा।
विशुद्धरक्ता त्वाग्नेयी दीप्तभा दर्शनप्रिया॥
शुद्धवैडूर्यविमला सुस्निग्धा तोयजा शुभा।
स्थिरा स्निग्धा घनश्यामा शुद्धा श्वेता च पार्थिवी॥"

---

१. 'अथ शरीरच्छायादर्शनेन ग्रहदशाज्ञानार्थमिन्द्रवज्रामाह—छा क; 'अथ दशाकालोपयोग्यानां कर्मभोगविनाशविषयाणां वस्तुविषयाणां पञ्चभूतविषयाणामिदन्तानिर्णयाय ग्रहाणां स्वस्वभूतगुणस्य व्यञ्जकत्वं दर्शयति'— ङ. २ 'व्य म' क. ३. 'ति कु' ; ४. 'आभिमुख्येन' घ ङ

इति। छायालक्षणम् आचार्येणापि संहितायामुक्तं—

"छाया शुभाशुभफलानि निवेदयन्ती
लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः।
तेजोगुणान् बहिरपि प्रतिभासयन्ती
दीपप्रभा स्फटिकरत्नघटस्थितेव॥

स्निग्धद्विजत्वङ्नखरोम*केशच्छाया सुगन्धा च महीसमुत्था।
तुष्ट्यर्थलाभाभ्युदयान् करोति धर्मस्य चाहन्यहनि प्रवृद्धिम्॥

स्निग्धा सिता सहरिता नयनाभिरामा
सौभाग्यमार्दवसुखाभ्युदयान् करोति।
सर्वार्थसिद्धिजननी जननीव चाप्या
छाया शुभा तनुभृतां फलमादधाति॥

चण्डा §धृष्टा पद्महेमाग्निवर्णा युक्ता तेजोविक्रमैः सप्रतापैः।
आग्नेयी च प्राणिनां स्याज्जयाय क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते॥

मलिनपरुषकृष्णा पापगन्धानिलोत्था
जनयति वधबन्धव्याध्यनर्थार्थनाशान्।
स्फटिकसदृशरूपा भाग्ययुक्तात्युदारा
निधिरिव गगनोत्था ‡श्रेयसे स्वच्छवर्णा॥"

इति[2]। क्ष्मम्ब्वग्निवाय्वम्बरजान् गुणान् गन्धरसरूपस्पर्शशब्दलक्षणांश्च यथाक्रमं नासास्यदृक्त्वक्श्रवणानुमेयान् अभिव्यञ्जयन्ति। अत्रास्यशब्देन जिह्वेन्द्रियं विवक्ष्यते। बुधस्य दशायां बलवद्बुधराशिगतस्यान्यस्य दशायां वा बलवद्बुधयुक्तेक्षितस्य दशायां वा नामानुमेयद्रव्यलब्धिः।

---

१. 'व इति B, २. 'ति। तथा क्ष्मम्ब्वग्निवाय्वम्बरजान् गुणांश्चाभिव्यञ्जयन्ति।" भूमेर्गुणो गन्धः। अब्गुणो रसः। अग्निगुणो रूपम्। वायुगुणः स्पर्शः। आकाशगुणः शब्दः। कथमनुमन्तव्या गुणा इत्यत्राह — नासास्यदृक्त्वक्श्रवणानुमेयानिति। नासया आस्येन दृशा त्वचा श्रवणेन चानुमेयान्। बुधस्य' D.

---

* 'केशाच्छाया' इति, § 'पथ्या' इति, ‡ 'श्रेयसां' इति मुद्रितसंहितापाठः।

फलानि कुर्वन्ति। मिश्रासु मध्यामिश्रफलसंज्ञासु। मिश्राणि[1] शुभफलानि अशुभफलानि च सङ्कीर्यमाणानि कुर्वन्तीत्यर्थः। होराफलं लग्नपतेः समानम्। होरा[2] लग्नं तत्फलं तद्दशाफलं लग्नपतेर्दशाफलेन समानम्[3]। लग्नपतेः लग्नाधिपग्रहोक्तफलवत् शुभमशुभं मिश्रं वा। एतदुक्तं भवति— लग्नाधिपदशाफलवत् लग्नदशाफलमिति। एवं योगारिष्टा उक्ताः। तेषां भङ्गा अमी प्रोक्ताः। तथाच सारावल्यां—

प्रवेशे बलवान् खेटः शुभैर्वा मर्भिरीक्षितः* ।
† सौम्यादिमित्रवर्गस्थो मृत्युकृच्च भवेत् तदा ॥

अन्तर्दशाधिनाथस्य विबलस्य दशा यदा ।
बलिनः स्यात् तदा भङ्गो दशारिष्टस्य तद् ध्रुवम् ॥

युद्धे च विजितो योऽसौ खेचरः स शुभो यदि ।
दशायां न भवेत् कष्टं ‡ स्वोच्चादिशुभसंस्थिते ॥"

इत्यादि[5]। लग्नदशाफलस्य लग्नपतिदशाफलतुल्यत्वे विशेषः पूर्वं चरादिषु द्रेष्काणवशेन प्रदर्शितः। एवं ग्रहाणां लग्नस्य च दशाफलानि संक्षेपेणोक्तानि दशासु प्रदर्शितानि। अन्तर्दशानां पृथक् फलविशेषानुक्त्या "अर्धमपहृत्य ददाति तु स्वमि"त्यत्रापहारेऽपि स्वफलप्रदानस्योक्तया च अन्तर्दशाफलमपि स्वस्वमूलदशाफलमित्युक्तं भवति। तथापि मूलदशान्तर्दशयोराधाराधेयत्वसम्भवान्मूलदशाधिपस्य धातुग्रहत्वेऽन्तर्दशाधिपस्य जीवग्रहत्वे च सति धातुकृतो जीवसम्भवो वक्तव्यः। विपर्यये जीवधातुर्वक्तव्यः। एवं मूलधातुर्वा धातुमूलं वा मूलजीवो वा जीवमूलं वा तेषां कर्म वा भोगो वा विनाशो वा भवतीति यथालक्षणं विमृश्य वक्तव्यम् ॥१९॥

---

१ 'णि फलानि अशुभानि शुभानि च सङ्की' ध. २ 'राफलं लग्नदशाफलं लग्नपतेः समा' क. ३. 'म् । लग्नदशाफलस्य समानत्वे' ध. ड. ४. 'नि' क. ५. 'दश' ख. ६. 'दि। अथ दशाविभ्रमे विशेषं दर्शयति—सं' क

---

* 'मुनिरीक्षितः' इति, † 'सौम्याधिमित्रवर्गस्थ' इति, ‡ 'स्वोच्चादिषु च संस्थितः' इति च मुद्रितसारावलीपाठः।

पुनःप्रसङ्गेनाह—

*संज्ञाध्याये यस्य यद् द्रव्यमुक्तं
कर्माजीवे यस्य यच्चोपदिष्टम् ।
भावस्थानालोकयोगोद्भवं यत्
तत्तत् सर्वं तस्य योज्यं दशायाम् ॥ २० ॥

इति । संज्ञाध्याये यस्य यद् द्रव्यमुक्तं, यस्य ग्रहस्य यद् द्रव्यं ताम्रादि,

"चन्द्रारोरगभौरैर्धातुर्मूलं किलार्कशुक्राभ्याम् ।
जीवो जीवबुधाभ्यां मेषाश्विन्यादि धात्वाद्याः ॥"

इत्याद्यन्यशास्त्रेषु विस्तरेणोक्तं च, अत्र यस्य यद् द्रव्यमित्यनेन विवक्षितम् । तत्सर्वं तस्य दशायां योज्यं योजनीयम् । तथा कर्माजीवे च यस्य यदुपदिष्टं, कर्मेति शेषः । भावस्थानालोकयोगोद्भवं च भावैर्लग्नादिभिः स्थानैर्मेषादिभिरालोकेन दृष्ट्या योगेन ग्रहयोगेन उद्भूतानि च फलानि तत्तत् सर्वं तस्य दशायां योज्यमिति सम्बन्धः । तथा भावोद्भवं "शूरः स्तब्धो विकलनयनः" इत्येवमादि च, तथा स्थानोद्भवं "कुलसमकुलमुख्य" इत्येवमादि "प्रथितश्चतुरोऽटन" इत्यादि च, यच्चालोकोद्भवं फलं "चन्द्रे भूपबुधा"वित्यादि, तथा योगोद्भवानि '०कर्म्यश्चतुरादिभिः' इत्यादि वक्ष्यमाणानि च दशासु योजनीयानीत्यर्थः[3] । योगकर्तृग्रहाणां बहुत्वे तेषां मध्ये यो बलवान् तस्य दशायां योज्यमिति भावः । नाभसयोगास्तु सकलदशास्वपि फलप्रदाः । वक्ष्यति च— "इति निगदिता योगाः सार्धं फलैरिह नाभसा नियतफलदाश्चिन्त्याश्चैते समस्तदशास्वपीति ॥ २० ॥

1. 'च' ग घ. 2 'भावफलानि स्थानफलानि दृष्टिफलानि योगफलानि वक्ष्यमाणानि दशासु' ङ 3. 'र्थः ॥२०॥' घ ङ

* क. ग. अस्य श्लोकस्य समनन्तरश्लोकानां चाध्यायपारे माधिपर्यन्त व्याख्यानं सर्वं विपर्यस्तं दृश्यते ।

दशाकालोपभोग्यानां[1] कर्मभोगविनाशविषयाणां वस्तुविशेषाणां पाञ्चभौतिकानां इयत्तानिर्णयाय ग्रहाणां स्वस्वभूतगुणव्यञ्जकत्वं दर्शयति—

छायां महाभूतकृतां च सर्वे-
ऽभिव्यञ्जयन्ति स्वदशामवाप्य ।
कम्वग्निवाय्वम्बरजान् गुणांश्च
नासास्यदृक्त्वक्छ्रवणानुमेयान् ॥ २१ ॥

इति । सर्वे ग्रहाः स्वदशामवाप्य[2] स्वां महाभूतकृतां छायां च अभिव्यञ्जयन्ति इत्यन्वयः । स्वामिति[3] "शिखिभूखपयोमरुद्गणानां वशिनो भूमिसुतादयः" इति ह्युक्तं कुज आग्नेयीं बुधः पार्थिवीं गुरुर्नाभसीं भृगुराप्यां शनिर्वायवीं च छायां स्वदशाकाले पुरुषस्य अभिव्यञ्जयन्ति अभिमुखेन[4] यथावद् व्यञ्जयन्ति । अत्र सर्वशब्दादादित्यचन्द्रावपि गृह्येते । ननु तयोर्महाभूताधिपतित्वं नोक्तम् । नैष दोषः । आदित्यचन्द्रौ वह्न्यम्ब्वात्मकौ प्रसिद्धावेव । अतस्तावपि वह्न्यम्भसोरधिपती, न केवलं भौमसितावेव । ततश्चाग्नेयीं छायां रविकुजावभिव्यञ्जयतः । छायामिति । छाया कान्तिविशेषः । "वर्णमाक्रामति छाया" इत्युक्तलक्षणा छायात्र गृह्यते । तथाचोक्तं वाहटेन—

"खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः ।
नाभसी निर्मला नीला सस्नेहा सप्रभेव च ॥
वातजा रूक्षिरा श्यामा भस्मरूक्षा हतप्रभा ।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥
शुद्धवैडूर्यविमला सुस्निग्धा तोयजा शुभा ।
स्थिरा स्निग्धा घनश्यामा शुद्धा श्वेता च पार्थिवी ॥"

1. 'अथ शरीरच्छायादर्शनेन ग्रहदशाज्ञानार्थमिन्द्रवज्रामाह—छा क. 'अथ दशाकालोपयोग्यानां कर्मभोगविनाशविषयाणां वस्तुविषयाणां पञ्चभूतविषयाणामियत्तानिर्णयाय ग्रहाणां स्वस्वभूतगुणस्य स्वरूपत्वं दर्शयति— ट. २ 'स्व म' क
३. 'ति पु ; ४. 'माभिमुख्येन प ट

इति । छायालक्षणम् आचार्येणापि संहितायामुक्तं—

"छाया शुभाशुभफलानि निवेदयन्ती
लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान् बहिरपि प्रतिभासयन्ती
दीपप्रभा स्फटिकरत्नघटस्थितेव ॥

स्निग्धद्विजत्वङ्नखरोम*केशच्छाया सुगन्धाथ महीसमुत्था ।
तुष्ट्यर्थलाभाभ्युदयान् करोति धर्मस्य चाहन्यहनि प्रवृद्धिम् ॥

स्निग्धा सिता सहरिता नयनाभिरामा
सौभाग्यमार्दवसुखाभ्युदयान् करोति ।
सर्वार्थसिद्धिजननी जननीव चाप्या
छाया शुभा तनुभृतां फलमाद्धाति ॥

चण्डा ऽधृष्टा पद्महेमाग्निवर्णा युक्ता तेजोविक्रमैः सप्रतापैः ।
आग्नेयी च प्राणिनां स्याज्जयाय क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते ॥

मलिनपरुषकृष्णा पापगन्धानिलोत्था
जनयति वधबन्धव्याध्यनर्थार्थनाशान् ।
स्फटिकसदृशरूपा भाग्ययुक्ताप्युदारा
निधिरिव गगनोत्था श्रेयसे स्वच्छवर्णा ॥"

इति[1] । क्ष्माम्ब्वग्न्याकाशाम्बरजान्[2] गुणान् गन्धरसरूपस्पर्शशब्दलक्षणांश्च यथाक्रमं नासास्यदृक्त्वक्श्रवणानुमेयान् अभिव्यञ्जयन्ति । अत्रास्यशब्देन जिह्वेन्द्रियं विवक्ष्यते । बुधस्य दशायां बलवद्बुधराशिगतस्यान्यस्य दशायां वा बलवद्बुधयुक्तेक्षितस्य दशायां वा नासानुमेयद्रव्यलब्धिः ।

---

१. 'व इति ॥, २. 'ति । तथा क्ष्माम्ब्वग्न्याकाशाम्बरजान् गुणांश्चाभिव्यञ्जयन्ति ।' भूमेर्गुणो गन्धः । अम्बुगुणो रसः । अग्निगुणो रूपम् । वायुगुणः स्पर्शः । आकाशगुणः शब्दः । कथमनुमन्तिव्या गुणा इत्यत्राह — नासास्यदृक्त्वक्श्रवणानुमेयानिति । नासया आस्येन दृशा त्वचा श्रवणेन चानुमेयान् । बुधस्य' घ.

---

* 'केशाच्छाया' इति, § 'दृष्या' इति, ‡ 'श्रेयसां' इति मुद्रितसंहितापाठः ।

तथा शुक्रस्य दशायां[1] जिह्वानुमेयगुणानां सम्भवो निर्देश्यः। इत्यादि द्रष्टव्यम्[2]। यस्य जातकमगणित, तस्य शरीरच्छायां दृष्ट्वा वर्तमानग्रहदशा ज्ञातव्येत्येतदाह— यदा स्वयं सुगन्धः पुरुषो भवति स्रक्चन्दनानुलेपनसुरभिद्रव्यवांश्च, तदा तस्य पार्थिवी बुधकृता छाया ज्ञेया। यदा मधुराम्लादिमृष्टरसभोजी, तदा तस्य चन्द्रशुक्रकृताप्या ज्ञेया छाया। यदा च रूपवान्[3] दर्शनीयो भवति तदादित्याङ्गारकयोरन्यतरकृताग्नेयी छाया ज्ञेया। यदा स्पर्शने मृदुर्भवति स्त्रीस्तनस्पर्शनाद्यभिरतश्च, तदा शनैश्चरकृता वायवी छाया। यदा च वचनं पुरुषस्य कर्णसुखकरं भवति स्वयं गीतवादित्रश्रोत्रसुखकाव्यकथाव्याख्यानाद्यभिरतश्च, तदा तस्य जीवकृता नाभसी छाया ज्ञेयेति। एवं सर्वे ग्रहाः स्वां स्वां दशां शुभामशुभां वावाप्य छायां स्वस्वामिकपृथिव्यम्ब्वादिमहाभूतमयीं घ्राणरसनाद्यवगतगन्धरसाद्यनुमेयां यथोक्तलक्षणां पुरुषेऽभिव्यञ्जयन्ति। तथा तद्ग्रहदशा वर्तत इत्यवगन्तव्यम् ॥ २१ ॥

देशाकाले फलभोक्तुः पुरुषस्यावस्थां दर्शयति[4]—

शुभफलददशायां तादृगेवान्तरात्मा
बहु जनयति पुंसां सौख्यमर्थागमं च।
कथितफलविपाकैस्तर्कयेद् वर्तमानां
परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः ॥ २२ ॥

इति। शुभफलददशायां पुंसामन्तरात्मा तादृगेवेत्यन्वयः[5]। शुभफलदस्य ग्रहस्य दशायां तद्वत्पुरुषस्यान्तरात्मा तादृक्, यादृशो ग्रहः शुभफलं ददाति तादृशः। रविशीतगू चेद् राजसदृशः,

---

1. 'यां बलवच्छुक्रराशिगतस्य दशायां वा बलवच्छुक्रेक्षितयुतदशायां वा जिह्वा'; २. 'व्यम् ॥२१॥' घ. ३. 'न् मदनतैकगणकं व्येक्षमाणाभ्यासौ च (?) तदा सूर्यभौमकृताग्नेयी छाया। य' ख. ४. 'अथ दशायामन्तरात्मनः स्वरूपं (शोभा)लिन्याह' क. ५. 'वा। शु' घ.

क्षितिसुतेश्चेत्सदृशः इत्यादि । बहु सौख्यमर्थागमं च जनयति । तत्सदृशं सौख्यं तत्सदृशमर्थागमं च बहु भूरि जनयति । पौरुषं-मुत्पादयतीत्यर्थः । अर्थादेवाशुभफलददशायां तद्धर्मैः सादृश्यं दुःख-मर्थक्षयं बहु जनयतीत्युक्तं भवति । अत एव कथितफलविपाकैः नरदन्तादिनिमित्तधनागमादिभिः कथितैः शुभफलविपाकैः तथा भार्या-पुत्रनिमित्तव्यापदुद्भवादिभिरनिष्टफलविपाकैर्हेतुभिः सूर्यस्य दशां वर्त-मानां तर्कयेत् धूमदर्शनेन हेतुनाग्निमर्वाग्मवानुमानेन तर्कयेत् कल्प-येदित्यर्थः । किं धूमाग्न्योरिव दशाफलदशयोर्नियता व्याप्तिरित्य-त्राह— परिणमति फलोक्तिरिति । उक्तानां फलानामवश्यभावित्व-मस्तीति सवीर्यैः वीर्यशालिभिः ग्रहैरुक्तानि फलानि परिणमन्त्येव, अवीर्यैः वीर्यशून्यैः ग्रहैरुक्तानि फलानि स्वप्नेषु वा चिन्तासु वा परिणमन्तीत्यत्र विशेषो द्रष्टव्यः । बलवद्भिर्ग्रहैः फलानां साक्षा-दनुभवः परिणमति । बलशून्यैः[10] स्वप्नेन वा मनोराज्येन वा अनुभवः परिणमतीति नियमात् फलानुभवेन ग्रहदशानुमानं सम्भवत्येव ॥ २२ ॥

[11] यद्येवं फलानामवश्यानुभवनीयत्वं नियतं, तर्हि महान् सङ्कटः । मेषलग्नजातस्य धूपभस्थे कुजे लग्नाधिपत्वेन धनवृद्धिकरत्वमष्टमाधिपत्वेन धनहानिकरत्वं च युगपत् सम्भवत इत्यादिषु कथं निर्वाह इत्यत्राह—

एकग्रहस्य सदृशे फलयोर्विरोधे
नाशं वदेद् यदधिकं परिपच्यते तत् ।
नान्यो ग्रहः सदृशमन्यफलं हिनस्ति
स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युः ॥ २३ ॥

इति । एकग्रहस्य सदृशे फलयोर्विरोधे नाशं वदेदित्यन्वयः ।

---

१. 'तो नत्' ; २. 'हुसम्भवानि' ङ ३ ' 'येणोष्या' ङ ४ 'सदृदशा' ~. ६. 'यं च व' घ ६. 'कैर्वर्तमानां दशा तर्कयेत् । कथितफलविपाकैन' ङ. ७. 'वस्त्रादिहे' ङ ८ 'ति । वीर्यंशा' घ, 'त्यर्थ । वीर्यंशा ङ ९ 'हैर्विपरि' ङ. १०. ' 'न्यैर्ग्रहै' स्व' , ११ 'पुनरपि फलविशेष चमन्वानिरुकेनाह—' ' घ

एकस्य ग्रहस्य केनापि निमित्तेन वृद्धिकरत्वम्, अन्येन निमित्तेन हानिकरत्वं च सम्भवति चेत्, सदृशो विरोधः । तत्र तयोः फलयोर्नाश वदेत् । तस्य भावस्य वृद्धेर्हानेर्वा नाशम् अदर्शनं वदेदित्यर्थः । तेन ग्रहेण तस्य भावस्य वृद्धिर्वा हानिर्वा न वक्तव्येति यावत् । एवं परस्परबाधया फलसम्भवाभावे वक्तव्येऽपि विशेषमाह— यदधिकं तत् परिपच्यते इति । तयोरेकं प्रति राश्यंशकयोगेक्षणादिभिः कारणैराधिक्यमस्ति चेत्, तत्फलं परिपच्यते दृश्यते इति यावत् । आधिक्येन परिपाकोक्त्या दर्शनेऽपि तारतम्यं वक्तव्यमिति द्योत्यते । एकग्रहस्य फलयोर्विरोधे एवं निर्वाहोऽस्तु । उभयोर्ग्रहयोः सदृशफलयोर्विरोधे कथमित्यत्राह — अन्यः ग्रहः सदृशमन्यफलं न हिनस्ति । कुजस्य फलमधर्मनिरतेषु प्रीतिः । अधर्मनिरतेषु वैरस्य फलकर्ता गुरुः न हिनस्ति न नाशयति । द्वयोरपि फलयोः सम्भव एव वक्तव्यः । तत् कथमित्यत्राह— स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युरिति । कुजः स्वदशायामधर्मनिरतेषु प्रीतिं जनयति । गुरुः स्वदशायामधर्मनिरतेषु वैरं जनयति इत्यादि स्वस्वदशाकालभोग्यत्ववशात् सदृशग्रहविरोधेऽपि अविरोधेन फलं वक्तव्यमित्यर्थः । एवं न्यायः वस्तुनिर्देशप्रकरणेऽपि । राश्यंशकयोगेक्षणादिभिः वस्तूनां विशेषनिरूपणे स्वरूपवर्णगुणादिषु परस्परविरोधप्राप्तावेवमेव न्याय इति सूच्यते ॥ २३ ॥

इति होराविवरणेऽष्टमोऽध्यायः ॥

---

१. 'योः फलयोरे' घ. ङ. २. 'शामो'; ३. 'वं' ङ. ४. 'मित्र द्वयोरपि फलयोः सम्भव एव वक्तव्यः । तत् कथमित्यत्राह— स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युरिति । कुजः स्वदशायामधर्मनिरतेषु प्रीतिं जनयति । गुरुः स्वदशायां वैरं जनयति इत्यादि वस्तूनां' घ. ५. 'ति चात्र द्योत्यते ॥ २३ ॥' घ. ङ.

# अथ नवमोऽध्यायः।

इष्टकर्मोपार्जितस्य[1] दशान्तर्दशादिविषयस्य[2] शुभाशुभविशेषस्य कालविशेषानुप्रदिश्येदानीमदृष्टकर्मनिबन्धनस्य गोचरफलस्वरूपस्य[3] शुभाशुभविपाकस्य कालविशेषान् प्रदर्शयितुमष्टकवर्गमाह[4]— 'स्वादर्कं' इत्यादिभिः[5] सप्तभिः श्लोकैः। शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्रलग्नाख्यस्याष्टकस्य[6] जननकाले येषु[7] राशिषु स्थितिः, तेभ्योऽष्टभ्योऽप्यारभ्य[8] राशिद्वादशके परतो ग्रहाणां[9] सप्तानां यत्र यत्र राशौ चारकाले शुभप्रदत्वं भवति, तेषां स्थानानां यः समुच्चयोऽष्टकवर्गसंज्ञस्तदिहोच्यते। अर्थादेव चारकालेऽन्यराशिषु स्थितानामशुभप्रदत्वं चोक्तं भवति। वक्ष्यति च—"इति निगदितमिष्टं नेष्टमन्यद्वि"ति। तत्र प्रथममादित्यस्याष्टकवर्गं[10] शार्दूलविक्रीडितेनाह—

स्वादर्कः प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगो
वक्रात् स्वादिव तद्वदेव रविजाच्छुक्रात् स्मरान्त्यारिषु।
जीवाद् धर्मसुतायशत्रुषु दशस्वायारिगः शीतगो-
स्त्वेष्वेवान्त्यतपःसुतेषु च बुधाल्लग्नात् सबन्ध्वन्त्यगः॥१॥

इति। तृतीयश्लोकस्थितः शुभशब्दः सिंहावलोकितन्यायेनात्राप्यनुकृष्यते[11]। अर्कः स्वात् प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगः शुभः स्यात्। स्वात् स्वाधिष्ठितराशेरित्यर्थः। एवमुत्तरत्र वक्रादित्यादिषु वक्राद्यधिष्ठितराशेरिति द्रष्टव्यम्। प्रथमशब्देन स्वाधिष्ठितराशिरुच्यते। तदादिषु यथोक्तेष्वष्टसु स्थानेषु गच्छन् शुभः[13] शुभप्रदो भवति। तद्व्यतिरिक्तेषु तृतीयपञ्चमषष्ठव्ययेषु गच्छन् अशुभप्रदो भवति इत्यनुक्तमप्यवगन्तव्यम्। वक्रात् स्वादिव, भौमाधिष्ठितराशेः स्वोक्तवत्[14]। प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनग इति यावत्। रविजात्

---

1. 'अथ मदृ' ख. 2. 'स्य काल' ख, 'स्य गो' ङ. 3. 'शुभाशुभविपाकस्य गोचरफलात्मकस्य काल' ङ. 4. 'ष्टव' ख. 5. 'दिभ' घ; 'दिभिः श्लो' ख. 6. 'कवर्गस्य' घ. 7. 'येषु ये' ख 8. 'द्वादशराशिषु च' ङ 9. 'णां स्वस्वस्य चा' ख. 10. 'र्गं प्रदर्शयते—' ख. ङ. च. 11. 'नुवर्तते' क. ख. ङ. च. 12. 'र्थ सर्वत्र च' ङ. 13. 'भानु' क. 14. 'त् शुक्रात्' ख.

निपूर्वादस्यतेः[1] लोटि मध्यमपुरुषैकवचनं,[2] निधेहीत्यर्थः । तिर्यग्विश्वे-तिर्यग्विश्वीनास्त्रयोदश रेखा ऊर्ध्वनन्दा अथ ऊर्ध्वा नव रेखा यथा भवन्ति, तथा चक्रं निधेहीति शिष्यं प्रति गुरोरुक्तिः । गिरिगिरिश-पदमिति चक्रस्य विशेषणम् । गिरयः सप्त । गिरिशा एकादश । पदशब्देन तिर्यगूर्ध्वयो रेखयोः सम्पात उच्यते । गिरिगिरिश-सङ्ख्यानि पदानि यस्येति बहुव्रीहिः । सप्तदशाधिकशतसङ्ख्यैः तिर्यगूर्ध्वरेखासम्पातैर्युक्तमित्यर्थः । (तथाकृते चक्रे?) । तथाकृतस्य चक्रस्योर्ध्वे[3] तदूर्ध्वे । लग्नाद्याः[4] राशयः स्युः । अथ ऊर्ध्वाः लग्ना-द्या द्वादश राशयो भवेयुः । कीदृशराशयः । ग्रहगणेन सहिताः

भावाश्रितफलं पूर्वं भावाधिपफलं पुनः ।
ग्रहयुक्तेषु वक्तव्यं शिष्टे भावाधिपात् फलम् ॥

इति वचनात् । अत्र चक्रे उपरि कोष्ठद्वादशकं लग्नकक्ष्ययोर्युक्तं भवति । तस्याधः सौरिमुख्यं शनैश्चरादिकं ग्रहगणं कक्ष्याक्रमेणोपरि न्यस्य तस्य लग्नकक्ष्याकोष्ठ-द्वादशकस्याधः सप्त कोष्ठद्वादशकानि सन्ति । तेषामधस्तने कोष्ठे सौरिं तत उपरितने गुरुं तत उपरितने भौमं तस्मादर्कं ततः शुक्रं ततो बुधं तत उपरि-तने चन्द्रं च न्यस्येत्यर्थः । एवं कृत्वाष्टकवर्गोदितसदहितफलभागाष्टके बिन्दुरेखाः प्रस्तार्या इत्यन्वयः । सदहितफलभागाष्टके सत्फलान्युक्तस्थानानि अहितफलानि अनुक्तस्थानानि । एवंरूपाणामुक्तानुक्तानां भागानामष्टके सप्तचक्रे स्वचक्रेण सहिते स्वस्वकक्ष्याधःकसहिते । लग्नादिद्वादशराशिषु पादोनचतुर्भागात्मका आदिमा अक्षरसंख्यया शुभाशुभप्रमाणा अष्टमभागाः सौरिकक्ष्या । तथा 'द्वितीयाष्टमभागाः सुरगुरुकक्ष्या' इत्यादि द्रष्टव्यम् । अतः सप्तचक्रे भागाष्टके इत्युक्तम् । बिन्दुरेखाः, यत्र सत्फलं तत्र बिन्दुर्निक्षेप्यः । यत्राहितफलं तत्र रेखा च निक्षेप्या । अत्र प्रस्तारे अर्कस्य स्वकक्ष्यायां स्वाधिष्ठिताद् राशेरारभ्य प्रथमायबन्धुनिधन-द्यूताज्ञातपोव्ययेषु बिन्दुर्निधातव्यः । तृतीयपञ्चमषष्ठव्ययेषु रेखा निधातव्या । चक्रान् त्यादिवेति । चक्रकक्ष्यायां चक्राधिष्ठितराशेरारभ्य यथोक्तानुक्तस्थानेषु बिन्दु-रेखाः कर्तव्याः । एवमन्यास्वपि कक्ष्यासु यथोक्तबिन्दुरेखाविन्यासः कर्तव्यः । एवं प्रस्तारविधिः । एवं सप्तानां ग्रहाणामपि प्रस्तारः कर्तव्यः । अत्र पृथक्पृथक्कक्ष्यासु ग्रहचारेण फले वक्तव्ये कक्ष्याधिपवशात् कक्ष्यास्थग्रहवशाच्च तत्रस्थषड्वर्गवशाच्च निरीक्षकग्रहवशाच्च फलविशेषा वक्तव्याः । बलाबलविशेषाद् ऊहापोहपटुभिरन-वरतमाराधितनिजेष्टदेवतागुरुभिरवधानपरैर्दैवज्ञैरेवमष्टकवर्गविधानेन गोचरफलानि नि-यतविषयदशान्तर्दशाफलैः सह यथोक्तकालविशेषेषु निर्देष्टव्यानि ॥१॥ च'' क. ग.

1. 'तेर्धातोः ङ'; २. 'तिरश्चीनाश्च'; ३. 'न्द्र'; ४. 'ऊर्ध्वकामि'; ५. 'र्ध्वे ल' ङ.

चारवशात् सम्प्राप्तैः सूर्यादिभिर्ग्रहैः सहिताः । शिष्टमिष्टस्य सद्म । शिष्टं ग्रहगणरहितमित्यर्थः । तदिष्टस्य ग्रहस्य सद्म, क्षेत्रमिति वेदितव्यम् । फलनिरूपणे राशीनां ग्रहयोगे सति ग्रहेण फलं वक्तव्यम्, ग्रहाभावे राश्यधिपेन फलं वक्तव्यमित्यर्थः । इति पूर्वार्धेन चक्रविन्यासः प्रदर्शितः । तत्र चक्रे अध ऊर्ध्वास्थिताः लग्नात् प्रभृति द्वादश राशयः कल्प्याः । पुनरेकैकत्र राशौ तिर्यक्स्थिताः पादोनमचतुष्कप्रमाणाः शुभाङ्कादिवाक्यैरवगन्तव्या अष्टावष्टौ कोष्ठाः सम्भवन्ति । अत्राह — तत्राधः सौरिमुख्यं ग्रहगणमुदयमपि च कक्ष्याक्रमेण प्रस्तार्य स्वस्वचक्रे फलपदभागाष्टके बिन्दुरेखा लिख इत्यन्वयः । सौरिमुख्यं ग्रहगणं शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्रानित्यर्थः । उदय लग्नराशिं च । तत्र चक्रस्याधः लग्नराशिस्थेषु अष्टसु कोष्ठेष्वित्यर्थः । कक्ष्याक्रमेण नतु वारक्रमेणेत्यर्थः । कक्ष्याक्रमः खलु कालहोराक्रमः । यथोक्तमार्यभटेन —

> "सप्तैते होरेशाः शनैश्चराद्या यथाक्रमं शीघ्राः ।
> शीघ्रक्रमाच्चतुर्था भवन्ति सूर्योदयाद् दिनपाः ॥"

इति । तस्मादध प्रथमकोष्ठः शनिकक्ष्या इत्यादि । अष्टमकोष्ठो लग्नकक्ष्या । एवं कक्ष्याक्रमः सर्वराशिषु ज्ञेयः । तद्वशात् प्रस्तार्य, यथोक्तक्रमेण लग्नादिराशिकोष्ठाष्टकेषु शनैश्चरादीन् कल्पयेदित्यर्थः । फलपदभागाष्टके इति । फलानां 'स्वादर्कः' इत्यादिभिरुक्तानां पदे स्थानभूते कोष्ठाष्टके । बिन्दुरेखाः बिन्दवो रेखाश्च बिन्दुरेखाः ता लिख, यथोद्दिष्टेषु स्थानेषु बिन्दून् लिख, अनुक्तस्थानेषु रेखाश्च लिख । एवं बिन्दुरेखालेखने कृते चक्रस्थिताः षण्णवतिकोष्ठाः पूरिता भवन्ति । तद्यथा — स्वादर्क इत्यस्य प्रस्तारः

---

१ 'स्था , २ 'क ३ 'स्याध तस्य च', ४ 'क्ष्या द्वितीय गुरुर्गुरुकक्ष्या, तृतीयो भौमकक्ष्या, चतुर्थकोष्ठ' सूर्य, पञ्चम शुक्रस्य कोष्ठ, षष्ठ बुधस्य, सप्तम चन्द्रस्य, अष्ट , ५ 'क्रम. तद्वशात् , ६ 'द्विविशिष्टको , ७ 'स्था ता', ८ 'स्वादृर्कै स्तरगादिमारभ्य बिन्दवः स्थाप्या' । अनुक्तेषु इत्यस्य प्रस्तार — क

तद्वदेव । शनैश्चरादपि प्रथमायबन्धुनिधनव्याज्ञातपोद्यूनग इति यावत् । शुक्रात् स्मरान्त्यारिपुं त्रिषु शुभः, शिष्टेषु नवस्वशुभः । जीवाद् धर्मसुतायशत्रुषु चतुर्षु शुभः । शीतगोः दशत्र्यायारिषुं चतुर्षु शुभः । बुधात् तेष्वेव दशत्र्यायारिष्वेव अन्त्यतपस्सुतेषु द्वादशनवमपञ्चमेषु च सप्तसु स्थानेषु शुभः । लग्नात् सबन्ध्वन्त्यगः । तेष्वेवेत्यनुवर्तते । दशत्र्यायारिषु बन्ध्वन्त्ययोश्च शुभः । एवमष्टचत्वारिंशत्स्थानेषु शुभः, अनुक्तेष्वष्टाचत्वारिंशत्स्थानेष्वशुभश्च भवति । ननु एवमादित्यचारेणावगन्तव्यानां शुभाशुभानां त्रिंशत्तिथ्यात्मकसौरमासान्तर्गतत्वेन तटाकान्तर्गतमीनवत् कुत्रेदं भवतीत्यनवगमाद् अष्टकवर्गफलोक्तिर्ग्रहीतुमशक्यैव । मन्द! मा मैवं, तदवधारणप्रकारसूचनाय आचार्येण श्लोकस्यान्ते लग्नात् सबन्ध्वन्त्यग इत्युक्तम् । किं तेनेति चेत् । सर्वसौरमासानामन्त्ये लग्ननिमित्तार्कचारशुभाशुभनिर्देश इति द्योतयितुं तथोक्तम् । अतो ज्ञायते सर्वराशीनामन्त्ये लग्नकक्ष्येति[3] । ग्रहाणां कक्ष्याक्रमस्तु प्रसिद्धः । कथमिति चेत् । तथाह्यार्यभटेनोक्तं—

"शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्राः ।
सप्तैते होरेशाः शनैश्चराद्या यथाक्रमं शीघ्राः ।"

इति । तत्र लग्नकक्ष्या नोक्ता, राशीनां घनभूमध्यादारभ्य आब्रह्माण्डकटाहभित्तिव्याप्तत्वनिर्देशेन कुत्र लग्नकक्ष्येति ज्ञानासम्भवः । फलकथनाय लग्नकक्ष्यास्थानमवश्यं वेदितव्यं च । अतस्तन्निर्धारणाय लग्नस्यान्ते निर्देशः कृत इति वेदितव्यम् । अतो राशीनामष्टधा विभागः पादोनचतुर्भागात्मके प्रथमो भागः शनैश्चरकक्ष्या । द्वितीयः सुरगुरुकक्ष्या । तृतीयो भौमकक्ष्या । चतुर्थः सूर्यकक्ष्या । पञ्चमः शुक्रकक्ष्या । षष्ठो बुधकक्ष्या । सप्तमश्चन्द्रकक्ष्या । अष्टमः पादोनचतुर्भागात्मको राशिभागो लग्नकक्ष्येति सर्वेषु राशिषु द्रष्टव्यम् । एवं द्वादशसु राशिषु अष्टधा विभक्तेषु षण्णवतिप्रमाणाः कक्ष्या भवन्ति । तत्रार्कः स्वाधिष्ठितराशेरारभ्य यथोक्तराशिषु स्वकीय-]

---

१. 'पु शु' ङ २. 'पु बन्ध्वन्त्ययोश्च शु'; 'पु म' ङ. ३. 'ति क' घ.
४. 'लानयना' ङ. ५. 'शिकक्ष्ये' घ.

कक्ष्याचारकाले शुभं ददाति, अनुक्तराशिषु स्वकीयकक्ष्याचारकालेऽशुभं च ददाति[1]। तथा वक्राधिष्ठितराशेरारभ्य यथोक्तराशिष्वात्मनो[2] वक्रकक्ष्याचारकाले शुभं ददाति, अनुक्तराशिष्वशुभं च ददाति। एवमष्टास्वपि कक्ष्यासु तत्तत्कक्ष्याधिपस्थितराशेरारभ्य यथोक्तराशिषु तत्तत्कक्ष्यायां चरन् शुभं ददाति, अनुक्तकक्ष्यास्वशुभं च ददाति। एवं[3] द्वादशसु मासेषु षण्णवतिफलानि कक्ष्याचारवशाद् निर्देश्यानि। तथा चन्द्राष्टकवर्गेण सप्तविंशतिनक्षत्रात्मके चन्द्रपर्यये किञ्चिदूनसप्तदशनाडिकात्मकचन्द्रकक्ष्याचारवशात् •षण्णवतिफलानि निर्देश्यानि। एवमर्कचारवशाच्चन्द्रचारवशाच्च गोचरफलानि कुशाग्रीयधिया यथास्वकालं तत्र तत्र वक्तव्यानि। अत्राष्टकवर्गे कक्ष्याचारफलसुखावबोधाय तत्प्रस्तारोऽवगन्तव्यः। तद्यथा—

"तिर्यग्विश्वोर्ध्वनन्दं[6] गिरिगिरिशपदं न्यस्य चक्रं तदूर्ध्वे
लग्नाद्या राशयः स्युर्ग्रहगणसहिताः शिष्टमिष्टस्य सद्म।
तस्याधः सौरिमुख्यं ग्रहगणमुदयं चापि कक्ष्याक्रमेण
प्रस्तार्य स्वस्वचक्रे[7] लिख फलपदमागाष्टके बिन्दुरेखाः॥"

अस्यार्थः — तिर्यग्विश्वोर्ध्वनन्दं चक्रं न्यस्य इत्यन्वयः। न्यस्येति

---

१. 'ति एवमष्टास्वपि कक्ष्यासुक्त तथा'; २. 'क्त आत्मनो' छ ३. 'वं च द्वा' ग घ. ४. 'त्र व' घ च ५ 'तत्प्रकारो' छ. ६ 'र्यङ्नन्दोर्ध्वविश्वं गि'; ७. 'सुपरि न्यस्य क'। ८. 'र्यो.' क.ग.घ.च. ९.'स' क ग ;'स्त्रीयच' छ. १०. 'के सद्विहसफलभा' ङ. ११. 'घं.— तिर्यङ्नन्दोर्ध्वविश्वं गिरिगिरिशपदं चक्रं न्यस्य। न्यस्येति स्थापनं वा कोटि परस्मैपदमप्यमपुरैकवचनं वा भवतु। स्थापनात्वे राशयो ज्ञेयाः स्युरित्यध्याहारेण ज्ञेयशब्देन सम्बन्ध। लोट्पक्षे शिष्यं प्रति विधि। तिर्यङ्नन्दोर्ध्वविश्वं तिर्यग्रूपा रेखा नव, ऊर्ध्वरूपा रेखास्त्रयोदश च यथा भवन्ति तथा। गिरिगिरिशपदचक्रं, पदशब्देन तिर्यगूर्ध्वयो रेखयोः सम्पात उच्यते। गिरय सप्त, गिरिशा एकादश। सप्तरसद्वयसा सङ्ख्यमाणानि पदानि यस्य तद् गिरिगिरिशपदं चक्रम्। एवं कृते षण्णवतिकोष्ठानि भवन्ति। तदूर्ध्वे चक्रस्योपरितनकोष्ठपंक्त्याम्। लग्नाद्या राशयो ज्ञेया स्युः। मेषादिस्थानिषेधार्थं लग्नाद्या इत्युक्तम्। तेषु केषुचित् ग्रहयुतेषु ग्रहाः फलदाः। शिष्टम् इष्टस्य सद्म शिष्टं स्थानम् इष्टस्य ग्रहस्य भवनम्। अतस्तेषु राश्यधिपाः फलदा इत्यर्थः।

प्रदर्श्यते - प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनग इति उक्तेषु स्थानेषु अर्ककक्ष्यायाम् अर्काक्रान्तराशिमारभ्य बिन्दवः स्थाप्याः। अनुक्तेषु तृतीयपञ्चमषष्ठद्वादशेषु चतुर्षु कोष्ठेषु रेखाश्च कर्तव्याः। वक्रात् स्वादिवेति। वक्रकक्ष्यायां यथादर्शितायां वक्रस्थितराशिमारभ्य उक्तेषु स्थानेषु बिन्दवः अनुक्तेषु रेखाश्च कर्तव्याः। तद्वदेव रविजादिति। रविजकक्ष्यायां तथा रविजस्थितराशिमारभ्य उक्तानुक्तस्थानेषु बिन्दुरेखा लेखनीयाः। शुक्रात् स्मरान्त्यारिषु इति यथोक्तायां शुक्रकक्ष्यायां शुक्रस्थितराशिमारभ्य सप्तमव्ययषष्ठेषु बिन्दवः अनुक्तेषु नवसु रेखाश्च[1] निधातव्याः। जीवाद्धर्मसुतायशत्रुषु[2] इति जीवस्थितराशिमारभ्य यथोक्तेषु चतुर्षु बिन्दवः अनुक्तेष्वष्टासु रेखाश्च[3] लेख्याः। दश-त्र्यायारिगः शीतगोरिति चन्द्राक्रान्तराशिमारभ्य यथोक्तेषु चतुर्षु बिन्दवः अनुक्तेष्वष्टासु रेखाश्च स्थाप्याः। तेष्वेवान्त्यतपस्सुतेषु च बुधादिति बुधस्योक्तेषु[4] सप्तसु स्थानेषु बिन्दुन्यासः, अनुक्तेषु पञ्चसु रेखान्यासश्च कर्तव्यः[5]। लग्नात् सबन्ध्वन्त्यग इति। अत्र द्वादश-राश्यात्मकपङ्क्तयष्टकयुक्ते चक्रेऽन्त्यायां लग्नकक्ष्यायां लग्नादारभ्य यथोक्तेषु[6] षट्सु कोष्ठेषु बिन्दवो निक्षेप्याः[7], अनुक्तेषु कोष्ठेषु रेखाश्च निक्षेप्याः[8]। इत्यादित्यस्य यथोक्ताष्टकवर्गप्रस्तारे कृतेऽष्टाचत्वारिंशत्-कोष्ठेषु बिन्दवो भवन्ति, अनुक्तेष्वष्टाचत्वारिंशत्स्थानेषु रेखाश्च भवन्ति। इति षण्णवतिकोष्ठा अपि बिन्दुरेखान्यत(मैर)योगेन अशून्या भवन्ति। एवं चन्द्रादीनामप्यष्टकवर्गप्रस्तारः कर्तव्यः[9] ॥ १ ॥

चन्द्राष्टकवर्गं[10] शार्दूलविक्रीडितेनाह—

लग्नात् षट्त्रिदशायगः मधनधीधर्मेषु चाराच्छशी
स्वात् सास्तादिषु साष्टमसप्तु रवेः षट्त्र्यायधीस्थो यमात्।

---

१. 'स्याः। तथा व' ; २. 'षु जी' ३. 'श्च स्थाप्याः।' ; ४. 'षु स्थानेषु सप्तसु बिन्दवः, अ' ; ५. 'व्याः' ६ 'थोद्दिष्टेषु' ; ७. 'षु षट्सु को' , ८. 'प्याः। आदित्यस्य'; ९. 'शत्कोष्ठेषु रे' ६. १० 'र्गमाह—' ख. ग. घ. ङ. च.

धीत्र्यायाष्टमकण्टकेषु च बुधाँज्जीवाद्धनायाष्टगः

केन्द्रस्थश्च सितात्तु धर्मसुखधीत्र्यायास्पदानङ्गगः ॥२॥

इति। शशी लग्नात् षट्त्रिदशायगः शुभ इत्यन्वयः। चन्द्रः लग्नकक्ष्यायां षट्त्रिदशायेषु शुभः, शिष्टेष्वष्टास्वशुभः। आराद्भौमात् सधनधीधर्मेषु षट्त्रिदशायेषु शुभः, शिष्टेषु पञ्चस्वशुभः। स्वात् सास्तादिषु षट्त्रिदशायेषु शुभः, शिष्टेषु षट्स्वशुभः। रवेः साष्टसप्तसु षट्त्रिदशायेषु शुभः, शिष्टेषु षट्स्वशुभः। यमात् षट्त्र्यायधीस्थः शुभः, अष्टस्वशुभः। बुधाद् धीत्र्यायाष्टमकण्टकेषु शुभः, चतुर्ष्वशुभः। जीवाद् धनायाष्टगः केन्द्रस्थश्च शुभः, शिष्टेषु पञ्चसु अशुभः। सितात् तु धर्मसुखधीत्र्यायास्पदानङ्गगः शुभः, शिष्टेषु पञ्चस्वशुभः। एवमेकोनपञ्चाशत्सु शुभः, सप्तपञ्चाशत्स्वशुभः॥२॥

कुजाष्टकवर्गं[11] शार्दूलविक्रीडितेनाह—

वक्रस्तूपचयेष्विनात् सतनयेष्वाद्याधिकेषूदया-

च्चन्द्राद् द्वित्रिफलेषु केन्द्रनिधनप्राप्त्यर्थगः स्वाच्छुभः।

धर्म्यायाष्टमकेन्द्रगार्कतनयाज्ज्ञात् षट्त्रिधीलाभगः

शुक्रात् षड्व्ययलाभमृत्युषु गुरोः कर्मान्त्यलाभारिषु ॥३॥

इति। वक्रस्तु इनादारभ्य सतनयेषु उपचयेषु शुभः, शिष्टेषु

* 'जीवाद् व्ययायाष्टग' इति मुद्रितपाठः। (Vide page 177 Brihadjatakam translated by Swamy Vijnanananda. "The sacred books of the Hindus series Vol XII).

१. 'मा लग्नात् चतुर्षु स्थानेषु शुभः एवमुत्तरत्रापि योजनीयम्। मा' ग यां लग्नात् षट्' घ. २. 'षु चतुर्षु स्थानेषु शु' घ. ङ च. ३. 'ष्वशुभः। रवे' घ. ४. भः। एवमुत्तरत्रापि योजनीयम्। आ' ङ. च. ५. 'द् स ङ. ६. 'षु सप्तसु शुभः (अनुक्तेषु ष' ङ. ७, ८. 'षु षट्सु शु ङ ९ भः शिष्टेषु च' क. ग. घ. ङ. १० 'ताद्' ङ. ११ 'र्गमाह—' ख. ग. घ ङ.

सप्तस्वशुभः । उदयाद् आद्याधिकेषु उपचयेषु शुभः, शिष्टेषु सप्त-स्वशुभः । चन्द्राद् द्वित्रिफलेषु शुभः, अन्येषु नवस्वशुभः । स्वात् केन्द्रनिधनप्राप्त्यर्थगः शुभः, अन्येषु पञ्चस्वशुभः । अर्कतनयाद् धर्मायाष्टमकेन्द्रगः शुभः, अनुक्तेषु पञ्चस्वशुभः[1] । ज्ञात् षट्त्रिधी-लाभगः शुभः, अनुक्तेष्वष्टस्वशुभः । शुक्रात् षड्व्ययलाभमृत्युषु शुभः, अनुक्तेष्वष्टास्वशुभः । गुरोः कर्मान्त्यलाभारिषु शुभः, अन्येष्वष्टासु अशुभः । एवमेकोनचत्वारिंशत्सु शुभः, सप्तपञ्चाशत्स्वशुभः ॥ ३ ॥

बुधाष्टकवर्गं[2] शार्दूलविक्रीडितेनाह—

द्याद्यायाष्टतपस्सुखेषु भृगुजात् सत्र्यात्मजेष्विन्दुजः
साज्ञास्तेषु यमारयोर्व्ययारिपुप्राप्त्यष्टगो वाक्पतेः ।
धर्मायारिसुतव्ययेषु सवितुः स्वात् साद्यकर्मत्रिगः
षट्स्वायाष्टसुखास्पदेषु हिमगोः साद्येषु लग्नाच्छुभः ॥ ४ ॥

इति । इन्दुजः भृगुजात् सत्र्यात्मजेषु द्याद्यायाष्टतपस्सुखेषु शुभ इत्यन्वयः, शिष्टेषु चतुर्ष्वशुभः । यमारयोः साज्ञास्तेषु द्याद्या-याष्टतपस्सुखेषु शुभः[3], अनुक्तेषु चतुर्ष्वशुभः । वाक्पतेः व्ययरिपु-प्राप्त्यष्टगः शुभः, अनुक्तेष्वष्टास्वशुभः[4] । सवितुर्धर्मायारिसुतव्ययेषु शुभः, अन्येषु सप्तस्वशुभः । स्वात् साद्यकर्मत्रिकेषु धर्मायारिसुत-व्ययेषु शुभः, अन्येषु चतुर्ष्वशुभः । हिमगोः षट्स्वायाष्टसुखास्पदेषु शुभः, अन्येषु षट्स्वशुभः । लग्नाद् आद्यसहितेषु षट्स्वायाष्टसुखा-स्पदेषु[6] शुभः, अन्येषु पञ्चस्वशुभः । एवं चतुष्पञ्चाशत्स्थानेषु शुभः । द्विचत्वारिंशत्स्थानेष्वशुभः ॥ ४ ॥

जीवाष्टकवर्गं[8] शार्दूलविक्रीडितेनाह—

दिक्स्वाद्याष्टमदायबन्धुषु कुजात् स्वात् सत्रिकेष्वङ्गिराः
सूर्यात् सत्रितपस्सु धीस्वनवदिग्लाभारिगो भार्गवात् ।

१. 'भः । सुरगु' ङ. २. 'गमाह—' ख. ग. घ. ङ. च. ३. 'यमादाराच उक्तेषु स्थानेषु शुभः, अ' क. ग. ङ. च. ४. 'ष्वन्यराशिष्व' क. ग. घ च. ५. 'नुक्तेषु स' ङ. ६ 'साद्येषु ष' ७. 'ज्ञासु शु' घ. ग. ५. ङ च. ८. 'गमाह—' ख. ग .

जायायार्थनवात्मजेषु हिमगोर्मन्दात् त्रिषड्धीव्यये
दिग्धीषट्स्वसुखायपूर्वनवगो ज्ञात् सस्मरश्चोदयात् ॥५॥

इति । अङ्गिराः कुजाद् दिक्स्वाद्याष्टमदायबन्धुषु शुभः[1] । तथा स्वात् सत्रिकेषु दिक्स्वाद्याष्टमदायबन्धुषु शुभः[2] । सूर्यात् सत्रिषट्स्सु दिक्स्वाद्याष्टमदायबन्धुषु शुभः । भार्गवाद् धीस्वनवदिग्लाभारिगः शुभः । हिमगोर्जायायार्थनवात्मजेषु शुभः । मन्दात् त्रिषड्धीव्यये[3] शुभः । ज्ञाद् दिग्धीषट्स्वसुखायपूर्वनवगः शुभः । उदयाद् दिग्धीषट्स्वसुखायपूर्वनवगः सस्मरश्च शुभः ॥५॥

शुक्राष्टकवर्गं[4] शार्दूलविक्रीडितेनाह—

लग्नादासुतलाभरन्ध्रनवगः सान्त्यः शशाङ्कात् सितः
स्वात् साज्ञेषु सुखत्रिधीनवदशच्छिद्रारिगः सूर्यजात् ।
रन्ध्रायव्ययगो रवेर्नवदशप्राप्त्यष्टधीस्थो गुरोः
ज्ञाद्धीत्र्यायनवारिगस्त्रिनवषड्*बन्ध्वागमान्त्यः कुजात् ॥६॥

इति । शुक्रः लग्नाद् आसुतलाभरन्ध्रनवगः शुभः । शशाङ्काद् आसुतलाभरन्ध्रनवगः सान्त्यश्च शुभः । स्वात् साज्ञेषु आसुतलाभरन्ध्रनवसु शुभः । सूर्यजात् सुखत्रिधीनवदशच्छिद्रारिगः शुभः । रवेः रन्ध्रायव्ययगः शुभः । गुरोः नवदशप्राप्त्यष्टधीस्थः शुभः । ज्ञाद् धीत्र्यायनवारिगः शुभः । कुजात् त्रिनवषड्बन्ध्वागमान्त्यः शुभः ।

१. 'भः । अन्येष्वशुभः । स्वात्' ; २. 'भः, अन्येष्वशुभः । सू' घ. ३ येषु शु' ड. ४. 'भः । एवं षट्पञ्चाशत्सु स्थानेषु शुभः । अनुक्तेष्वष्टाचत्वारिंशत्स्थानेष्वशुभः ॥५॥' ड ५ 'र्गमाह—' ख. ग. घ. ड च ६ 'त्रः' च ७ भः ॥ मन्दा क. ग. घ. च.

* 'पुत्राय सान्त्य' इति मुद्रितपाठः । (Vide page 121 Brihadjatakam translated by Swami. Vijnanananda. "The secred books of the Hindu " series Vol. XII).

एवं द्विपञ्चाशत्स्थानेषु शुभः। चतुश्चत्वारिंशत्स्थानेष्वशुभः ॥ ६ ॥

मन्दाष्टकवर्गं[1] शार्दूलविक्रीडितेनाह—

मन्दः स्वात् त्रिसुताप्तिशत्रुषु शुभः साज्ञान्त्यगो भूमिजात्
केन्द्रायाष्टधनेष्विनादुपचयेष्वाद्ये सुखे चोदयात्।
धर्मायारिदशान्त्यमृत्युषु बुधाच्चन्द्रात् त्रिषड्लाभगः
षष्ठान्त्यायगतः सितात् सुरगुरोः प्राप्त्यन्त्यधीशत्रुगः ॥ ७ ॥

इति। मन्दः स्वात् त्रिसुताप्तिशत्रुषु शुभः, भूमिजात् साज्ञान्त्यगः त्रिसुताप्तिशत्रुषु च शुभः। इनात् केन्द्रायाष्टधनेषु शुभः, उदयादुपचयेष्वाद्ये सुखे च शुभः। बुधाद् धर्मायारिदशान्त्यमृत्युषु शुभः। चन्द्रात् त्रिषड्लाभगः शुभः। सितात् षष्ठान्त्यायगतः शुभः। सुरगुरोः प्राप्त्यन्त्यधीशत्रुगः शुभः। अनुक्तेष्वन्यराशिषु[2]शुभः। एवमेकोनचत्वारिंशत्सु शुभः, सप्तपञ्चाशत्स्वशुभश्च भवतीति द्रष्टव्यम् ॥ ७ ॥

एवं ग्रहाणामष्टकवर्गमेवमभिधाय[3]तत्फलनिर्णयार्थं मालिनीमाह—

इति निगदितमिष्टं नेष्टमन्यद् विशेषा-
दधिककफलविपाकं जन्मिनां तत्र दद्युः।
उपचयगृहमित्रस्वोच्चगाः पुष्टमिष्टं
त्वपचयगृहनीचारातिगैर्नेष्टसम्पत् ॥ ८ ॥

(इति।) इति[7] निगदितमिष्टम्, अन्यन्नेष्टमित्यन्वयः। इतीशब्देन

---

१. 'र्गमाह—' ख. ङ. च. २. 'षु शु'। ३. 'प्टसप्तसु' क. ग. घ. च. ४. 'प्तचत्वारिंश' ख. ५. 'र्गचिन्त्यामसु' ख. ङ. ६. 'परस्था विशेषकथनाय तदेवानुवदति—' क. ग. घ. च; तथा तेन फलनिरूपणस्य लक्षणमाह—' ङ. ७. 'ति स्वादर्के इत्यादिभिः सप्तभिः श्लोकैरित्यर्थः। निगदितमिष्टं प्रथमायबन्धुनिधनादिस्थानमिति शेषः। तद् इष्टम् इष्टफलस्थानम्। अन्यद् अनिगदितं तृतीयपञ्चमादिस्थानं नेष्टम् अनिष्टफलमिति सम्बन्धः। ननु सप्तमाध्यायेन' घ. च.

'स्वादर्के' इत्यादिभिः सप्तभिः श्लोकैरुक्तप्रकारो निगद्यते । निगदितमुक्तम्, इष्टं प्रथमायबन्धुनिधनादि । स्थानमिति शेषः । तदिष्टम् इष्टफलम् । अन्यद् अनुक्तं तृतीयपञ्चमादिस्थानम्, नेष्टम् अनिष्टफलमित्यर्थः । राशिषु द्वादशस्वपि कक्ष्यावशादष्टधा विभागेन गतेषु षण्णवतिखण्डेषु ग्रहाणामष्टकवर्गस्थानेषु 'स्वादर्के' इत्यादिना यथोक्तानि अष्टचत्वारिंशत् स्थानानि सूर्यस्य शुभफलप्रदानीत्युक्तं भवति । एवमन्येषामपि ग्रहाणां स्वैः स्वैः श्लोकैरुक्तानि स्थानानि शुभानि । तत्र प्रत्येकं शुभस्थानसङ्ख्या—

"देवो धवो धिगो विष्णुः क्षमी रामो धिगः क्रमात्"

इति । अशुभस्थानसङ्ख्या च—

"देवः सुम्भः समा रम्भा नाभिर्विद्वान् ममा क्रमात्"

इति । ननु सप्तमाध्यायेन जीवितकालो[3] दर्शितः । अष्टमाध्यायेन दशान्तर्दशादिभेदजनितेषु जीवितकालविभागेषु[6] ग्रहाणां फलविशेषा दर्शिताः । तेषामिष्टानिष्टता च तत्र दशानां सम्पूर्णारिक्तादिसंज्ञाभेदेन प्रदर्शिता । तदनेनाष्टकवर्गेण पुनः कुत्रत्यानीष्टानिष्टानि कथ्यन्ते ।-सत्यम् । अनेनाष्टकवर्गेणापि जीवितकालभवान्येवेष्टानिष्टानि कथ्यन्ते । किन्तु दृढकर्मनिमित्तानि फलानि दशान्तर्दशादिभिर्निर्देश्यानि । अदृढकर्मनिमित्तानि अष्टकवर्गगोचरफलानि तदविरोधेन तत्र तत्र निर्देश्यानि । परस्परविरोधे द्विविधान्यपि सम्भवन्ति । परस्परविरोधे तु दशाफलान्येव प्रबलानि । अपि च काल एव खलु फलानि सर्वाण्यपि पाचयति । स च—

"कालो बलीयान् त्रिविधानुभावषड्भावनेतावयवस्तनशून्यः ।
तस्यानुमेयस्त्वमुपक्रमान्तभाजो विभागाश्च खगर्क्षचाराः ॥"

---

१. 'लस्थानम्'; २. 'लस्थानमिति सम्बन्ध । ननु' क. ग ३ 'लप्रमाणं द' क. ग. घ. च. ४. 'तम्' क ग. घ. च, 'त । तत्र च अ' ङ ५ 'शाजनितभेदेषु जी; ६. 'षु फलानि च अष्टमाध्यायेनोक्तानि । तेषां'; ७. 'शादिसम्पूर्णानां संज्ञाभेदेन' ङ ८. 'दिनिर्देशद्वारेण दर्शिता । अनेनाष्ट' घ. च ९ 'शानिर्देशद्वारेण द' क. ग.

अतोऽत्र जननकालग्रहस्थितिविशेषावगन्तव्यानां दशादिफलानां पाक-कालस्य तात्कालिकग्रहर्क्षचारावगम्यत्वेन दशाफलस्य गोचरफलस्य च सदासङ्कीर्णता भवत्येव । तत्र दशाफलान्यष्टमाध्याये दर्शितानि । गोचरफलानि तु मुहूर्तशास्त्रप्रसिद्धान्यत्र संक्षिप्य लिख्यन्ते । तथाचोक्तं विद्यामाधवेन—

"पुंसां जन्मादिभावेषु यत् फलं ग्रहचारतः ।
वराहमिहिरेणोक्तं संक्षेपात् तदिहोच्यते ॥

आयभ्रातृद्विषदुपगतौ स्थानमानादिलाभं
वित्ते वित्तक्षयमथ सुहृत्पुत्रगौ क्लेशमीतिम् ।
कामे रोगान् व्यसनमतुलं धर्मगौ सूर्यभौमौ .
भौमो मङ्गं दिशति दशमे कर्मसिद्धिं दिनेशः ॥

क्रमेण भोगोदयमर्थहानिं
जयं भयं शोकमरातिभङ्गम् ।
सुखान्यनिष्टं गदमिष्टसिद्धिं
मोदं[1] व्ययं च प्रददाति चन्द्रः ॥

अर्थक्षयं धनमरातिभयं धनाप्तिं
भार्यासुतादिकलहं विजयं विरोधम् ।
पुत्रार्थलाभमथ विघ्नमशेषसौख्यं
पुष्टिं पराभवभयं च करोति चान्द्रिः ॥

नानादुःखं वित्तसमृद्धिं स्थितिनाशं
बन्धुक्लेशं पुत्रधनाप्तिं रिपुबाधाम् ।
भोगान् रोगान् वित्तसुताप्तिं धनहानिं
स्थानप्राप्तिं दुःखभयं यच्छति जीवः ॥

अखिलविषयभोगं वित्तसिद्धिं विभूतिं
. सुखसुहृदभिवृद्धिं पुत्रलब्धिं विपत्तिम् ।

1. 'लाभं' ज ; २. 'द्रव्यं' ट. ३ 'भ' ग, 'च' ग. ४. 'पु' ग ५. 'नीतिम्' ट.

युवतिजनितबाधां सम्पदं स्त्रीसुखाप्तिं
कलहमुदयमाप्तिं दैत्यमन्त्री विधत्ते ॥

नानारोगशुचं सुखार्थविहतिं स्थानार्थभृत्यादिकं
स्त्रीबन्धर्थसुखच्युतिं धनसुखभ्रंशं सपत्नक्षयम् ।
मार्गासक्तिमनल्पदुःखनिचयं धर्मप्रणाशमयान्
दारिद्र्यं धनलाभमर्थविहतिं धत्ते क्रमादर्कजः ॥

द्वादशजन्माष्टमगाः पुंसां दिननाथभौमशनिजीवाः ।
वित्तक्षयं प्रवासं रोगान् जनयन्ति मरणमीतिं वा ॥

इत्थं समस्तजगतामशुभं शुभं च
सञ्जायते हि निखिलं ग्रहचारशक्त्या ।
पूजास्तुतिप्रणतिभिर्मुदिता ग्रहास्ते
कुर्वन्त्यनिष्टगतयोऽपि जनस्य लक्ष्मीम् ॥"

एवमुक्तानि गोचरफलानि कीदृग्विधजातकस्य पुरुषस्य कीदृशे काले कीदृग्रूपाणि सम्भवन्तीति ज्ञानार्थमष्टकवर्गप्रदर्शनं कृतम् । तथाहि– मातुलसङ्ख्यदिवसात्मके सौरसंवत्सरे सूर्यस्य राशिचारात्मका द्वादश मासाः । एकत्र मासे पादोनभागचतुष्टयप्रमाणान्यष्टौ खण्डानि । तानि च शनैश्चरादिलग्नान्तानामष्टानां कक्ष्या भवन्तीति पूर्वं प्रदर्शितम् । तत एकस्य मेषादिमासस्यादौ पादोनभागचतुष्टयात्मकं खण्ड शनैश्चरस्य कक्ष्या । तस्यामादित्याष्टकवर्गप्रस्तारे विन्दुश्चेदिष्टफलं[6] भवति । रेखा चेदनिष्टफलं भवति । एवमेव जीवादीनां कक्ष्यास्वपीष्टानिष्टफलनिर्देशः । तस्मादष्टास्वपि विन्दवः सम्भवन्ति

१ 'तिं' ग च २ 'त' ह ३. 'वा' ख ह ४. 'सा । तेष्वेकत्र शुभान्मया', ५. 'तः सर्वेष्वपि सौरमासेषु प्रथमं पा', ६ 'लं रें', ७ 'लग्नकचारे वक्तव्यम् । ए', ८. 'पि द्रष्टव्यम् । ततो यत्र राशावष्टास्वपि कक्ष्यासु विन्दवस्तत्र चारः शोभनः यत्राष्टास्वपि रेखाः स्युः तत्र चारः कष्टफल इत्युक्तं भवति । फलविशेषनिर्णयस्तु कक्ष्याचारिणो ग्रहस्य कक्ष्याधिपस्य च षड्वर्गयोगेक्षणसम्बन्धवशेन सञ्जायते । फलानि च त्रिविधानि कर्मात्मकानि भोगात्मकानि विनाशात्मकानि चेति । तत्र

चेत् तस्मिन् मासेऽर्कचारः शोभनफल एव । अष्टास्वपि कक्ष्यासु रेखाभावश्चेत् सोऽर्कमासः (शून्यः?) कष्टफलो भवति । फलविशेषाश्चार्ककक्ष्याधिपयोर्यथोक्तगुणतारतम्येन वक्तव्याः । अर्कस्य रूपप्रधानं कटुरसप्रधानं वा द्रव्यं, शनेस्तु कक्ष्याधिपस्य स्पर्शप्रधानं कषायरसप्रधानं वा द्रव्यम् । तस्मादर्कस्य शनैश्चरकक्ष्यायां[1] तयोर्बलाधिक्ये दर्शनीयं स्पर्शसुखप्रदत्व च पट्टवस्त्रादि भवति । बलवैकल्ये कम्बलादि भवति । एवं च बलविशेषेण वस्तुनिर्देशः । 'चन्द्रारोरगसौरै'रित्यादिनिर्दिष्टा धातुमूलजीवाश्च ग्रहं राशिभिर्नक्षत्रैश्चावगन्तव्याः । तत्र राशिषु त्रयो द्रेक्काणाः कर्मभोगविनाशात्मकाः क्रमेणावगन्तव्याः । तेषु त्रिष्वपि द्रेक्काणेषु त्रयस्त्रयो नवांशकाः चरस्थिरोभयात्मकाः धातुमूलजीवा भवन्ति । तस्मादेकस्मिन् राशौ कर्मधातुः कर्ममूलं कर्मजीवः, तथा भोगधातुः भोगमूलं भोगजीवश्च, तथैव नाशधातुः नाशमूलं नाशजीवश्चेति नव भेदाः सम्भवन्ति । तेषां च भेदानां नवग्रहयोगेक्षणादिवशात् प्रत्येकं नव भेदाः सम्भवेयुः । एवमेकाशीतिभेदा वस्तुजातयः । पुनरपि तात्कालिकपञ्चभूतगुणसम्बन्धवशेन विशेषनिर्णयः । ग्रहाणां बलवशेन तत्र तत्रोत्तममध्यमाधमत्वानि च

कर्मात्मकानि कृषिगोरक्षवाणिज्यादिसम्पादनविषयाणि । भोगात्मकानि च त्रिविधान्नपानवस्त्रगीतम्रक्चन्दनवनितादानुभवरूपाणि । विनाशात्मकानि च वाक्पारुष्यताडनच्छेदनभेदनोन्मादनादीनि । एषां त्रिविधानामपि फलानामुपयोगीनि वस्तूनि च त्रिविधानि धातुमूलजीवभेदेन । तत्र धातवो धान्यभाण्डलोहाश्मिमृत्तिकादिभेदेन बहुविधाः । मूलानि च तृणगुल्मलतावनस्पतिशानस्पत्यादिभेदेन बहुविधानि । जीवाश्च जरायुजाण्डजस्वेदजादिभेदेन बहुविधाः । अत्र राशिषु द्रेक्काणैः क्रमेण कर्मभोगविनाशभेदावगतिः । द्रेक्काणेषु स्थितैस्त्रिभिस्त्रिभिर्नवांशैश्चरस्थिरोभयात्मकैर्धातुमूलजीवावगतिः । तेषां च प्रत्येकं नवग्रहयोगेक्षणवशाच्च नव भेदा भवन्ति । एवमेकाशीतिभेदा वस्तुजातय एकस्मिन् राशौ सम्भवन्ति । तद्विशेषनिर्णयश्च तात्कालपञ्चभूतोदयसम्बन्धिशब्दस्पर्शरूपरसगन्धरूपगुणसम्बन्धवशेन नानाविधवस्तुरूपानुमेयत्वादिना वस्तुनामभिरुप राशिग्रहसम्बन्धाक्षरप्रधाने सेत्स्यति । ग्रहाणामुच्चनीचादिवशेन वस्तूनामुत्तममध्यमाधमता च द्रष्टव्या । एवंप्रकारावगन्तव्यानां' क. ग.

१. 'स्यकं', २. 'यो या तं', ३. 'स्तु विशेषो निर्देश्यः । च' ट.

वक्तव्यानि । ग्रहराशिद्रेक्काणादिवर्णहोरादिनामधेयप्रकारेणोपदिष्टवस्तुविशेषाणां नामान्तराणि च विचिन्त्यानि । एवंप्रकाराधगन्तव्यानां वस्तुविशेषाणां सम्पत्तिरिष्टफलं विपत्तिरनिष्टफलम् । *पुनरपि इष्टानिष्टफलनिर्देशविशेषमाह — जन्मिनां तत्र विशेषादधिकफलविपाकं दद्युरिति । "प्रथमायबन्धुनिधनव्याज्ञातपोधूनत्र" इति निर्दिष्टानां फलानां सम्भवे तत्तद्भावगता विशेषा वक्तव्याः । प्रथमफले मूर्तिगतानीष्टानि, आयफले लाभगतानीष्टानि इत्यादि तत्तद्भावफलवशेन फलपाकं दद्युरित्यर्थः । तथानुक्तस्थानेषु तत्तद्भावगतान्यनिष्टफलानि च दद्युः । तथा अर्कस्य फलनिरूपणे आत्मप्रभावपितृचिन्ताविषयाणि इष्टानिष्टानि वक्तव्यानि । चन्द्रस्य मनोज्ञनन्यादिविषयाणि, कुजस्य सत्त्वसहजादिविषयाणि, बुधस्य वचनविषयाणि, गुरोः ज्ञानसुखसन्ततिविषयाणि, शुक्रस्य कलत्रभोगविषयाणि, शनैश्चरस्य दुःखदास्यादिविषयाणि, इष्टानिष्टफलानि निर्देष्टव्यानीत्यर्थः । पुनरपीष्टानिष्टफलानां पुष्ट्यपुष्टिचिन्ताविषयं दर्शयति —उपचयगृहमित्रस्वोच्चगा ग्रहा इष्टं पुष्टं दद्युः । तथा अनुपचयगृहनीचारातिगैर्ग्रहैरनिष्टसम्पत् । अनिष्टानां प्राचुर्यं भवतीत्यर्थः । अत्राष्टकवर्गेण फलपाकसमयनिरूपणे संवत्सरस्य षण्णवत्यंशे पादोनभागचतुष्टयप्रमाणे समये सूर्यस्य कक्ष्यावशादेकं फलं परिपच्यते । तत्रैव संवत्सरषण्णवत्यंशसमये चन्द्रस्याष्टकवर्गेण सप्तविंशतिदिनात्मकचन्द्रभगणस्य षण्णवत्यंशाः प्रायः सप्तदशनाडिकाप्रमाणास्त्रयोदश सम्भवेयुः । ततः सूर्यस्य हि कक्ष्याफलभोगकाले चन्द्रस्य त्रयोदशफलानि जायन्ते । तथा चन्द्रस्य एकफलपाककाले सप्तदशनाडिकाप्रमाणे चत्वारो राशयः सप्त च कालहोराः सम्भवन्ति । एभिः कालविशेषैः सहिता दशाफलानां पाचयिता

१ 'फलानीशायमाह—' घ च. २ 'पाकका' छ.

* इत उपरि 'ननु श्रीपतिने'ति पूर्वपक्षावधि क ग घ. च पुस्तकस्थानि भिन्नानि एतत्समानार्थकानि च दृश्यन्ते ।

चन्द्रमास्तु पोषयिता। 'इष्टान्युदयोचादौ क्षेत्रे कष्टानि चास्तनीचादौ' इत्यादिवचनवशेन परम्परानुगुणैर्यथासम्भवं प्रत्यब्दमासद्युनिशाराशिकालहोरागतानि धनलाभधनहानिवस्त्रसिद्धिवस्त्रहानिसुखासनपतनभयभोजनमैथुनादिफलानि ग्रहगोचरसम्भवानि अष्टकवर्गेण सम्यग् विचिन्तनीयानि। तथा पूर्वमायुर्दायोक्तानि फलानि च वक्ष्यमाणेन 'भावाद् भवनभनाथगुणैर्विचिन्तनीयमि'ति श्लोकोत्तरार्धेन सूचितया नक्षत्रनाथदशयां ग्रहाणां शुभाशुभानि दशाफलानि स्वदशायां स्वापहारे स्वच्छिद्रापहारे च तदन्तर्गतापहारेषु च यथोक्तानि योजयितव्यानि। तथा कर्माजीवाध्यायादिभिः प्रदर्शितानि कर्माजीवयोगफलस्थानफलभावफलस्वरूपाणि नैसर्गिकफलानि जन्मिनां पुरुषाणां जननादिमरणावधिकालोपभोग्यानि ग्रहविशेषबलावगम्यानि ग्रहाणां यथोक्तेषु कालेषु प्राधान्येन योजयितव्यानि। ग्रहाणां कालविशेषाश्च "स्वदिवसनिसमहोरामासगैः कालवीर्यम्" इत्यादिषु सूत्रिता ग्राह्याः। एवमुक्तप्रकाराणि दशाफलानि दृढकर्मोपार्जितानि गोचरफलान्यदृढकर्मोपार्जितानि कादाचित्कानि। नैसर्गिकफलानि दृढादृढकर्मोपार्जितानि प्रायिकाणि त्रिविधान्यपि फलानि सम्यग् विचार्य परस्पराविरोधेन संयोज्य यथाबलं यथानिर्दिष्टं यथासम्भवं यथाकालं च कुशाग्रधिया सांवत्सरेण सांवत्सरसूत्रोक्तगुणशालिना सम्यगाराधितगुरुचरणप्रमादाधिगतसकलसम्प्रदायरहस्येन सत्यवादिना कामक्रोधाद्यनभिभूतेन सूर्यभक्तेन सतताराधितविद्यावृद्धेन पृच्छकाय शुभदिवसतिथिनक्षत्रसमयारब्धप्रश्नाय साधुवृत्ताय शुभाशुभमभयजिज्ञासवे करतलामलकवत् सुव्यक्ततया निर्देष्टव्यानीति अध्यायान्तोपदिष्टेनानेन श्लोकेन द्योतितं भवति। ननु श्रीपतिना जातकपद्धतौ—

"पाकं द्वादशधा वदन्ति यवना दिग्भेदभिन्नं पुन-
र्माणित्थः खलु बादरायणमुनिस्तं चाष्टधा प्रोक्तवान्।

१. 'शिहो', २. 'या शुभाशुभफलसम्भववाह्निया ग्रहाणां स्वदशायां स्वापहारे स्वच्छिद्रापहारे च यथोक्तानि दशाफलानि योज'; ३. 'कदृष्टिफलस्व'; ४. 'न विनीतेन पृ'-क.

षड्भेदं खलु सिद्धसेनविबुधास्तं देवलाद्याः पुन-
र्भेदैरष्टविधमितैरुदारधिषणः श्रीविष्णुगुप्तास्त्रिभिः ॥

पाकं द्विभेदं पुनराह सत्यस्तच्छास्त्रदृष्ट्या कथयाम्यशेषान् ।"

इति पाको द्वादशधा प्रदर्शितः । तत् कथमत्र त्रिविधत्वेनोच्यते । सत्यम् । आचार्यस्तु फलपाकं त्रिविधमेव मन्यते तदन्तःपातित्वादन्येषां भेदानाम् ॥ ८ ॥

इति होराविवरणे नवमोऽध्यायः ॥

---

## अथ दशमोऽध्यायः ।

अथ सर्वपुरुषार्थानामर्थमूलत्वाद् अर्थार्जनसाधनं पुरुषस्य नैसर्गिकं स्वभावं दर्शयितुं कर्माजीवमाह । तथा दशान्तर्दशाभेदैरष्टकर्मोपार्जितकर्मविपाकसमयम् अष्टकवर्गेणाष्टकर्मोपार्जितकर्मविपाकसमयं च प्रदर्श्य तदधिकरणानां शुभाशुभफलानां

---

१. 'सप्तमाष्टमाभ्यां दशकर्मोपार्जितानि दशाफलानि, नवमेनाष्टकवर्गाध्यायेन अष्टकर्मोपार्जितानि गोचरफलानि च प्रदर्श्य इदानीं दशारक्षकर्मोपार्जितानि नैसर्गिकफलानि प्रदर्शयितुमारभ्यते । ननु

"नैसर्गिकः स्यात् प्रथमोऽत्र भेदो दशाक्रमाख्यस्तु पुनर्द्वितीयः ।
अन्तर्दशाख्यः कथितस्तृतीयः प्रोक्तश्चतुर्थोऽपि दशाभिधानः ॥
स्याद्राशिमध्यः खलु पञ्चमोऽत्र षष्ठस्तथा भावफलाख्यभेदः ।
योगाभिधानः खलु सप्तमोऽपि स्यादष्टमो दृष्टिफलाभिधानः ॥
प्रोक्तोऽष्टवर्गो नवमो मुनीन्द्रैर्होराश्रिवर्गो दशमो ग्रहाणाम् ।
प्रत्यब्दमासद्युनिशाफलैः स्यादेकादशो मैथुनभोजनाद्यैः ॥
स्याद् द्वादशः सत्त्वशरीरधातुः स्वरूपभेदैः[1] कथितोऽत्र तज्ज्ञैः ।"

इति द्वादशधा फलपाकैः, तत्कथमत्र त्रिविधत्वेनोच्यते । सत्यम्, आचार्यस्तु पाकं त्रिविधमेव मन्यते तदन्तःपातित्वादन्येषां[2] भेदानाम् । तथा[3] च ट. २. 'सं प्रथमं कर्माजीवं दर्शयति' ह.

---

1. 'कालस्वरूपैः कथि' ; 2. 'कः । सत्याचार्यस्तु त्रि' , 3. 'याम् । तथा'; 4. 'तत्र तत्र सर्वं' ह.

पुरुषव्यापारसाध्येषु पुरुषार्थेष्वन्तर्भावात् पुरुषार्थेषु च धर्मकामयोरप्यर्थमूलत्वाद् अर्थपुरुषार्थस्य प्राधान्यादर्थाप्तिनिमित्तानां व्यापाराणां स्वरूपज्ञानं प्रति कर्माजीवाध्याय आरभ्यते । तत्र प्रथमं परवशादागन्तुकस्यार्थस्याप्तिं लक्षयति—

अर्थाप्तिः पितृजननीसपत्नमित्र-
भ्रातृस्त्रीभृतकजनाद् दिवाकराद्यैः ।
होरेन्द्वोर्दशमगतैर्विकल्पनीया
भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या ॥ १ ॥

इति । होरेन्द्वोः दशमगतैः दिवाकराद्यैः क्रमात् पितृजननीसपत्नमित्रभ्रातृस्त्रीभृतकजनाद् अर्थाप्तिर्विकल्पनीया इत्यन्वयः । होरेन्द्वोः लग्नाच्चन्द्राच्च दशमगतेन दिवाकरेण पितृतः अर्थाप्तिः । पितृधनं लभ्यत इत्यर्थः । लग्नात् दशमस्थे चन्द्रे जननीधनलब्धिः । अत्रेन्दोरपि दशमभावस्य इन्दुषड्वर्गसम्बन्धे सति जननीधनलाभो भवतीति वक्तव्यम् । एवमन्येषामपि षड्वर्गसम्बन्धेनापि बलाधिकत्वे योगफलं द्रष्टव्यम् । तथा लग्नाच्चन्द्राच्च दशमस्थे भौमे सपत्नादर्थाप्तिः । सपत्नशब्देन सहजशत्रवः पितृव्यतत्पुत्रादय उच्यन्ते । बुधे दशमस्थे मित्रेभ्यः । अर्थान्मातुलादिभ्यः अर्थाप्तिः । गुरौ दशमस्थे भ्रातृभ्यः । शुक्रे दशमस्थे स्त्रीभ्यः भार्याभगिन्यादिभ्यः । मन्दे दशमस्थे भृतकजनाद् भृत्येभ्यो दासेभ्यो वा धनलाभो भवतीति वक्तव्यम् । चतुर्थपादेन स्वव्यापारसम्भवस्यार्थस्याप्तिमाह — भेन्द्वर्कास्पदपतिगांशनाथवृत्त्येति । अर्थाप्तिरिति सम्बन्धः । भं च इन्दुश्च अर्कश्च भेन्द्वर्काः. तेषामास्पदपतिगांशः स्वाधिष्ठितराशेर्दशमराशिनाथेनाधिष्ठितो नवांश इति यावत् । तस्य भेन्द्वर्कास्पदपतिगांशस्य यो नाथः तस्य वृत्त्या वक्ष्यमाणया अर्थाप्तिर्भवति । भेन्द्वर्काणां तदास्पदपतीनां तदंशनाथानां च बलाबलनिरूपणेन अर्थाप्त्यै पुरुष-

---

1. 'पितुं प्रह्वंणीमाह—अ' क. 2. 'कयो', 3. 'सम्पन्घस्यार्थ' छ.
4. 'त्या अ' क. ग. घ. च. 5. 'मना' घ. च. 6. 'ति प्रोक्तानां स' ङ.

व्यापारः कर्माजीवो वक्तव्य इत्युक्तं भवति । अत्र केचित्—लग्नार्कशशाङ्कानां यो बलवांस्तस्यैवास्पदपतिनवांशनाथवृत्त्या धनं वक्तव्यमितीच्छन्ति । तदयुक्तम् । यस्माच्छ्लोकेऽस्मिन् बलग्रहणं नास्ति । (तस्मादेव ज्ञायते ।?) तस्मात् सर्वेभ्य एव । पुरुषस्य बहुप्रकार धनागमदर्शनादिति । तथाच गार्गिः—

'उदयादिन्दुतो वापि ये ग्रहाः दशमस्थिताः ।
ते सर्वेऽर्थप्रदा ज्ञेयाः स्वदशासु यथोदिताः ॥
लग्नार्करात्रिनाथेभ्यो दशमाधिपतिर्ग्रहः ।
यस्मिन्नवांशे तत्काल वर्तते तस्य यः पतिः ॥
तद्वृत्त्या प्रवदेद् वित्तं जातस्य बहवो यदा ।
भवन्ति वित्तदास्तेऽपि स्वदशासु विनिश्चिताः ॥"

इति ॥१॥

सेन्द्वर्कास्पदपतिनवांशनाथवृत्तिविशेषानर्कादिक्रमेणाह[1]—

अर्कांशे तृणकनकोर्णभेषजाद्यै-
श्चन्द्रांशे कृषिजलजाङ्गनाश्रयाच्च ।
धात्वग्निप्रहरणसाहसैः कुजांशे
सौम्यांशे लिपिगणितादिकाव्यशिल्पैः ॥ २ ॥

इति । अर्कांशे तृणकनकोर्णभेषजाद्यैरर्थाप्तिः । अर्थनिमित्तं कर्म भवति । तृणं होमसाधनगवादिभवनभरणाच्छादनाद्युपयोगिकम् । कनकं मुख्यलोहोपलक्षणम् । ऊर्णं मृगादिलोमजनितवस्तु । भेषजं विविधौषधद्रव्यविशेषः । आदिशब्देन यथोक्तोपकारकद्रव्यान्तराणि । एतैर्निमित्तभूतैः क्रयविक्रयादिकर्मभिरर्थसिद्धिकरं कर्म वक्तव्यमित्यर्थः । चन्द्रांशे कृषिजलजाङ्गनाश्रयाच्च । कृषिः नदीवप्रादि-

1 'न् प्रदर्शयितुं महर्षिणोद्वयमाह—' क. 2 'द श्लोकद्वयं न—' ग घ. ङ. च.

सलिलसम्पाद्यव्रीह्यादिजननं कर्म । जलजाः जलसम्भवमत्स्यशङ्खपद्म-नौकादयः । अङ्गनाश्रयः अङ्गनानां पतित्वेन वा परिचारकत्वेन वा अन्येन वा येनकेनचिन्निमित्तेन संश्रयः । एतैर्निमित्तभूतैः कर्मभिरर्थसिद्धिर्भवति । धात्वग्निप्रहरणसाहसैः कुजांशे । धात्वग्निप्रहरण-साहसैः, धातवो द्विविधाः धाम्या अधाम्याश्च । तत्र धाम्याः कांस्यताम्रवङ्गसीसकनकरजतादयः । अधाम्याः मृत्पाषाणहरितालमनःशिलादयः । अग्निः धमनोपकरणाग्निरत्र गृह्यते । प्रहरणानि आयुधानि धनुर्वेदशिक्षाद्युपकरणानि । साहसं हिताहितानपेक्षं कर्म रज्जुचरणा-काशखेलनादि । एतद्विषयैः कर्मभिरर्थसिद्धिर्भवतीत्यर्थः । सौम्यांशे लिपिगणितादिकाव्यशिल्पैः लिपिः पुस्तकलेखनादिविषया । गणितादि, गणितमष्टाधिकारिकं लौकिकगणितम् । आदिशब्देन ग्रहचारग्रहण-समागमगणितादयः । काव्यं लोकोत्तरवर्णननिपुणकविकर्म । शिल्पानि चित्रलेखनादीनि । एतन्निमित्तैः[1] कर्मभिरर्थसिद्धिर्भवतीत्यर्थः ॥ २ ॥

जीवस्य द्विजविबुधागमादिधर्मैः
शुक्रांशे मणिरजतादिगोमहिष्यैः ।
सौरांशे श्रमवधभारनीचशिल्पैः
कर्मेशाध्युषितसमानकर्मसिद्धिः ॥ ३ ॥

अंशे इत्यनुवर्तते । जीवस्यांशे द्विजविबुधागमादिधर्मैः । द्विजास्त्रैवर्णिकाः तेषां धर्माः, अध्ययनाध्यापनादयः । विबुधा देवाः, तद्विषया धर्माः मन्त्रजपार्चननमस्कारादयः । आगमाः मीमांसादयः । आदिशब्देन देवस्वाधिकारादयः । एतद्विषया धर्मा आगमादिधर्माः । एतन्निमित्तैः कर्मभिरर्थसिद्धिर्भवति । शुक्रांशे मणिरजतादिगोमहिष्यैः । मणयो रत्नानि वैडूर्यादीनि । रजतादयः रूप्यम् । आदिशब्देन अन्येऽपि सीसादयो गृह्यन्ते । गोशब्देन क्षीरघृतप्रधाना गवादय उक्ताः ।

---

१. 'तैर्निमि' ट. २. 'त्तभूतैः क' ग घ ३. 'थांशे द्वि' घ, च ४. 'काव्यांशे' ङ. ५. 'रस्य ध' क. ग. घ. ङ. च. ६ 'देवार्च' घ. ७. 'रविगृतपूत' ङ.

